जम्मू मध्ये स्थित मजीन् ग्रामे ताती नद्यां तटाके नूतनतया निर्मित श्रीवेङ्कटेश्वरस्वामिनः आलय सम्प्रोक्षण कार्यक्रमे जम्मूकाष्मीर् लेप्ट्नेन्ट् गवर्नर् मन्मोहन् सिन्हा, केन्द्रमन्त्रिवर्यः डा.जितेन्द्र सिंग, श्री किषन् रेड्डि, ति.ति.दे., कार्यकर्तारः मण्डलि अध्यक्षः श्री वै.वी.सुब्बारेड्डि दम्पत्यः संसदसदस्यः श्री वेमिरेड्डि प्रभाकर् रेड्डि, श्री जुगल् किशोर् शर्मा, जम्मूकाशमीर् प्रभुत्व प्राधान कार्यदर्शी, श्री अरुण् कुमार् मेहता, डिल्ली स्थानिक सलहा मण्डलि अध्यक्षा श्रीमती वेमिरेड्डि प्रशान्त रेड्डि, ति.ति.दे. सम्युक्त कार्यनिर्वहणाधिकारि श्रीवीरब्रह्मम् ऐ.ए.एस्., तदितराः अस्मिन् कार्यक्रमे भागं गृहीतवन्तः।



















# गीतामृतम्



अर्जुन उवाच -

न हि प्रपश्यामि ममापनुद्याद् यच्छोकमुच्छोषणमिन्द्रियाणाम्।
अवाप्य भूमावसपत्नमृद्धं राज्यं सुराणामपि चाधिपत्यम्।।

(भगवद्गीता २-८)

भावः - अर्जुनः वदति हे कृष्ण! केन उपायेन मम दुःखं नाशं प्राप्स्यति इति अहं न जानामि। मम दुःखं इन्द्रियाणि शोषयति। शत्रुरहितस्य राज्यस्य लाभेन अपि देवेन्द्रपदव्याः लाभेनापि मम दुःख नाशं न गमिष्यति इति मम अभिप्रायः। अतः भवानेव दुःखात् मां तारयतु। इति।

# सङ्कीर्तनम्



तव मां द्रष्टुं दयास्ति वा
त्रिविदैर्धनानि ते नामानि ।।तव।।

कररमणीकङ्कणैर्घनकुच
गिरौ स्थापितकिन्नरीयम्
सरसं म्लेच्चरचनानि त्वयि
स्थिरा नदयति ते नामानि ।।तव।।

कलरवकम्पितकण्ठविलसनं
किलकिलमेलनकिन्नरीयम्
ललना कावा लङ्घितवाद्यम्
तिलकयति तदा ते नामानि ।।तव।।

निरतमूर्छनानिबिडतालरव
गिरा योजितकिन्नरीयम्
तरुणीरणयति तदा समीपे
तिरुवेङ्कटवर ते नामानि ।।तव।।

(अन्नमाचार्यसङ्कीर्तनम्)

सम्पादकीयम्

# स्वच्छ तिरुमल - अस्माकं विधिः

"आरोग्य मेव महाभाग्यम्" इति विश्वजनीना सत्या सूक्तिः। अकलुषं पर्यावरणमारोग्यवर्धकं भवति। तद्विरुद्धतया कलुषितं पर्यावरणमारोग्यं भञ्जयति। विश्वक्षेमाय, देशक्षेमाय, समाजक्षेमाय, व्यक्तिक्षेमाय, सकलजीवजालक्षेमाय, वृक्षलताविक्षेमाय च पर्यावरणं परिरक्षणीयमिति सर्वैरङ्गीक्रियते। यत्र जनसम्मर्दः अधिकः अस्ति तत्र आनुषङ्गिकतया पर्यावरणकालुष्यं सम्भवति। एवं स्थिते तिरुपतौ तिरुमले च कालुष्यस्य सम्भवावकाशः अत्यधिकः भवति। श्रीनिवासप्रभोः दर्शनार्थं देशस्य, विश्वस्य च समस्तकोणेभ्यः आगच्छतां भक्तजनानां संख्या गणनीयतामतिवर्तते। अहर्निशं गिरिमार्गाः, गिरेः उपरितनप्रदेशाः पादतलानि च असंख्याकानां यानानां धूमादिभिः, असंख्याकानां जनानां यातायातैश्च अविश्रान्तकालुष्यसम्पर्किणः भवन्त्येव।

दर्शनार्थमालये प्रविष्टानां जनानां सम्मर्देन जायमानस्य वातावरणवैषम्यस्य परिहाराय यावती अप्रमत्तता स्वीकार्या तावतीं स्वीकुर्वन्त्येव आलयाधिकारिणः, तिरुमलतिरुपतिदेवस्थानपालकमण्डली च पर्यावरणपरिरक्षणे दायित्वं न केवलम् आलयाधिकारिणां पालकमण्डल्याः, आलयकर्मचारिणामेव इति न मन्तव्यं तदपेक्षया अधिकं दायित्वं दर्शनार्थिनां भक्तजनानामेव भिन्नभिन्नसम्प्रदायिनः भिन्नभिन्नप्रदेशीयाश्च, भक्तजनाः आगच्छन्ति। तेषां तेषामाहारविहाराभ्यासाः भिन्नभिन्नाः भवन्ति। व्यक्तिशः अपि अभ्यासेषु भेदाः भवन्ति। मातृमूर्तयः शिशून् आनीय आगच्छन्ति। तेषामावश्यकताः अन्यविधाः भवन्ति। अतः सर्वैरपि पर्यावरणपरिरक्षणविषये सावधानैः भवितव्यम्।

व्यर्थपदार्थाः इतस्ततः अक्षिप्त्वा व्यर्थपदार्थानां कृते तत्र तत्र निक्षिप्तासु अवकरिकासु (Dustbins) एव क्षेप्तव्याः। सुनम्य (Plastic) वस्तूनि, स्यूताः जलकूप्यः इत्येवमादीनि पूर्णतया त्यक्तव्यानि, तेषां विनियोगः न करणीयः।

जलस्य जीवनमिति नाम। सर्वेषां प्राणिनामत्यन्तम् उपयोगाय भवतीति भगवता जलमेव आदौ सृष्टम्। कलुषितस्य जलस्य विनियोगद्वारा अनेके रोगाः त्वरया संक्रामन्ति। अतः जलं यथा कलुषितं न भवति तथा अस्माभिः व्यवहर्तव्यम्। स्वामिनः पुष्करिण्यां धूलिधूसरितशरीरेण न प्रवेष्टव्यम्। वस्त्रादि प्रक्षालनं न करणीयम्।

आलये वा आलयपरिसरेषु वा ध्वनिकालुष्यं निवारयितुं भक्तजनैः इतरैः सर्वैरपि भगवत्सेवापरैः श्रद्धालुभिर्भवितव्यम्। गोविन्दनामानि एवं भगवत्संकीर्तनध्वनिं विना अन्यस्य ध्वनेः श्रवणप्रवेशः माभूत्।

वृक्षो रक्षति रक्षितः। आलयसमीपे वा गिरौ यत्रकुत्रापि वा विद्यमानानां वृक्षाणां किसलयानि, शाखाः वा न छेत्तव्याः। वृक्षेभ्यः मानवजातेः कियान् उपकारः भवतीति सर्वे जानन्ति। अत एव गिरेरुपरि वृक्षाणां पोषणार्थं वृक्षसंख्यां समेधयितुं च आलयजनैः निरन्तरपरिश्रमः क्रियते। अविश्रान्तदृष्टिः दीयते। सर्वैरपि अस्माभिः भक्तजनैः, आलयजनैः आपणजनैः, तिरुपतिनगरसम्बन्धिभिः विशिष्य तिरुमलसम्बन्धिभिः पर्यावरणपरिरक्षणविषये महती जागरूकता आस्थेया। पर्यावरण परिरक्षणमेव भगवत्सेवा एकं तपः इति मत्वा, निश्चित्य तत्पराः भवेम। सर्वारोग्यं रक्षणीयम् इति शम्।

।।ओं नमो वेङ्कटेशाय।।



*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*



तिरुमल-तिरुपतिदेवस्थानानां सचित्रमासपत्रिका
आध्यात्मिकसचित्रमासपत्रिका

# जूलै २०२३

सम्पुटिः-१० सञ्चिका-०४
श्रीशोभकृत्संवत्सरस्य आषाढशुक्लत्रयोदशी तः श्रीशोभकृत्संवत्सरस्य अधिकश्रावण शुक्लत्रयोदशी पर्यन्तम्-१९४४



गौरवसम्पादकः-
श्री ए.वी.धर्मारेड्डि I.D.E.S.,
कार्यनिर्वहणाधिकारी (F.A.C.), ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,
प्रत्येकाधिकारी,
ति.ति.दे.मुद्रणालयः,
तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्कटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.

मुखचित्रम् - तिरुमल श्रीस्वामिनः आणिवर आस्थानम् ।
अन्तिमरक्षापुटः - आण्डाळ् तिरुवाडिप्पूरम् शात्तुमोर ।

सूचना
मुद्रितलेखानां विचाराः लेखकानामेव।
एतद्विषये अस्माकं दायित्वं नास्ति।
*— प्रधानसम्पादकः*

**सङ्केतः**
प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९, २२६४३६०
सूचनानाम्, आक्षेपाणां च कृते
सम्पर्कं कुर्वन्तु -
sapthagiri.helpdesk@tirumala.org

एका पत्रिका : रू.२०/-
वार्षिकग्राहकत्वम् रू.२४०/-
आजीविक ग्राहकत्वम् रू.२४००/-

# शान्ताकारं भुजगशयनम्

गुरुसहस्रावधानी डा।। कडिमिल्ल वरप्रसादः
चरवाणी - ९२४७८७९९६०६

**शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं
विश्वाकारं गगनसदृशं मेघवर्णं शुभाङ्गम्।
लक्ष्मीकान्तं कमलनयनं योगिहृद्ध्यानगम्यं
वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम्।।**

विष्णुस्तोत्रपरः आयम् श्लोकः लोके अत्यन्त प्रसिद्धः प्रथमतः श्रीहरिः शान्ताकारः इत्युच्यते अनेन श्लोकेन। अत्र विशेषः कि वर्तते? यो निर्धनो भवति लोके तस्य जनस्य अशान्ताकारः वर्तते। किन्तु हरेः वक्षसि लक्ष्मीः निरन्तरं वसति। तस्मात् अशान्तिं प्राप्तुमवकाश एव न जायते। किन्तु तदनन्तरमेव वदत्ययं श्लोकः भुजगशयनः इति। गृहे भुजगः प्रविष्टवान्वा इति संशयमात्रेणेव तस्मिन् गृहे यस्य कस्यापि वा निद्रा न जायते। किन्तु श्रीहरिः भुजगस्य शरीरं शय्यां कृत्वा तत्र गाढनिद्रां प्राप्नोति। तदेव स्थितप्रज्ञस्य लक्षणम्। अनेकासु विषतुल्यसमस्याः सन्त्यपि विकलचित्तो न भवति यः स एव स्थितप्रज्ञः।

हरिः विषसर्पशयनं करोति। हरः विषभक्षणं कृतवान्। शिवकेशवयोरुभयोरपि आपत् न सञ्जाता यस्य हृदये अमृतं वर्तते तस्य विषेण वा विषधरेण वा प्रमादः न भवतीति निश्चप्रचम्। सः शान्ताकारः सः भुजगशयनः पद्मनाभश्च बभूव। नाभीदेशः सर्वनाडीव्यवस्थायाः आधारभूत प्रदेशः। तस्मादेव नाभीबन्धेन सह सञ्याते शिशुः मातृगर्भात्। तन्नाभिदेशात् पद्मं सञ्जातं विष्णोः। तस्मात् ब्रह्मा आविर्बभूव। सः चतुराननः। चतुराननेषु चतुर्वेदाः वर्तन्ते। सरस्वती च निवसति। यस्य नाभीदेशः सकल वेदविज्ञानस्य केन्द्रस्थानं भवति सः सुरेशो भवत्येव। देवताजनानपि शासितुं समर्थो भवति। स एव विश्वाकारो भवति। विश्वात्मको भवति। अत एव विश्वं विष्णुः इति प्रोक्तं विष्णुसहस्रे।



सोऽयं पुरुषः गगनसदृशो भवति। गगनं गगनाकारं इति अनन्वयालङ्कारः। हरिणातल्यो हरिरेव तु केवलम्। आकाशेन हि अवकाशो लभते सर्वप्राणिनामपि। हरिणैव सर्वप्राणिनामवकाशास्सञ्जायन्ते लोके जीवितुं वा मुक्तिं प्राप्तुं वा। मोक्षमिच्छेत् जनार्दनात् इति खलु। शब्दगुणकमाकाशम् इति तर्कशास्त्रम्। अपौरुषेयः सृष्ट्यादौ सञ्जातः शब्दः वेद एव। तस्मात् गगन सदृशमित्यत्र श्रीहरिः वेदात्मकः, वेदरूपः इति।

मेघवर्णो नारायणः कालवर्णः इत्यर्थः। अनेकानि सन्ति वस्तूनि लोके कालवर्णात्मकानि। किन्तु मेघवर्ण इत्येव किमर्थमुच्यते हरिरितिचेत्, मेघेनैव हि सस्यश्यामला भवति धात्री। अत एव प्राणिनः सर्वे प्राणवन्तो भवन्ति। अर्थात् नारायण एव सकलप्राणिनामन्नदाता भवतीति। यो निरतान्नदाता भवति स एव शुभाङ्गः। तादृशो जनः केवलं लक्ष्मीवान् लक्ष्मीकान्तो भवति। तस्यैव नेत्रे कमलसदृशे। ताभ्यां नेत्राभ्याममृतं वर्षति।

महान् सन्तोषः। एतावान् पुरुषोत्तमो नारायणश्चेत् तस्य दर्शनमवश्यं कर्तव्यं खलु। कथं तस्य पुरुषोत्तमस्य, महानुभावस्य, जगद्रक्षकस्य, जगन्नाथस्य दर्शनं भवतीति चेत्, योगिहृद् ध्यानगम्यः। योगः चित्तवृत्ति निरोधः इति पतञ्जलिमहर्षिः उक्तम्। यस्य चित्तं निर्मलं भवति, यस्य चित्तं विकलं न भवति, स एव योगी। यो योगी हृदये निरन्तरध्यानं करोति तस्यै एव दर्शनभाग्यं ददाति नारायणः। तस्य सर्वलोकैकनाथस्य दर्शनेन किं प्रयोजनमितिचेत् भवभयहरणम्। इति शम्।



# गुरुः कः?

- ई.पार्थसारथिः
चरवाणी - ६३००६४९९६२

''**गु**कारश्चन्धकारस्तु रुकारस्तन्निवर्तकः''

'गु' इत्यस्य अर्थः अन्धकारः 'रु' इत्यस्यार्थः तस्य अवरोधकः इति। आचार्यः ज्ञानप्रदाता भवति। राशीभूतं ज्ञानमेव गुरुरिति वेदोक्तिः। गुरोः पूजनं साक्षात् ज्ञानोपासनमेव। गुरोः स्थितिः मातापितृभ्यः श्रेष्ठा इति कथ्यते। ''यथा देवे तथा गुरो'' इति ज्ञानमार्गे अनुयायिनः कथयन्ति। माता जन्म ददाति पिता पोषयति, परन्तु आचार्यः पुनर्जन्मराहित्यरूप ईश्वर सायुज्यम् अनुगृह्णाति।

## गुरु शिष्य सम्बन्धः

गुरु-शिष्यसम्बन्धः अतीव महान् अस्ति। अद्भुतः सम्बन्धः यः शब्दैः वर्णयितुं न शक्यते। शिष्यः गुरोः पुत्र इव भवति। शिष्याः गुरोः उत्तराधिकारिणः। गुरुः कारुण्यमूर्तिः अस्ति अतः शिष्यस्य उन्नतिम् अन्विष्य अध्यापनं करोति। गुरुशिष्ययोः आत्मसम्बन्धः इति वेदान्तशास्त्रं प्रतिपादयति। शिष्यः इत्यर्थः यस्य इन्द्रियाणाम् अनुशासितत्वात् अर्थात् शमदमशिक्षितः। गुरुः दर्शनेन (नयनदीक्षा), स्मरणेन (स्मरण दीक्षा) आशीर्वादं दातुं शक्नोति। ईश्वरः गुरोः अधीने भवति। गुरुः शिष्यपराधीनः। सः स्वशिष्यस्य उन्नतिम् ईश्वरं निवेदयति। पितुः सम्पत्तिः सन्तानं प्रति गच्छतीति लोके व्यवहारः। किन्तु गुरोः सम्पत्तिः शिष्यस्य भवति। गुरोः सम्पत्तिः धर्मः, गुरोः सम्पत्तिः रामायणः, तस्य शास्त्राणि, आशयाः च। अस्मिन् जगति गुरुर्विना किमपि न सिध्यति। अत एव शिष्यस्य आचार्यात् अन्यत् धनं लोके नास्ति।

गुरुनाम्नः उल्लेखमात्रेण, गुरुदर्शनमात्रेणैव विनयेन नमस्कार समर्पणम् अस्माकं परम्परा अस्ति। अस्माकं मोक्ष प्रदातः गुरोः ऋण विमुक्तेः मार्गम् अस्ति किम्? तादृशं द्रव्यं तस्य क्रेता कोऽपि नास्ति। अत एव महात्मने गुरवे शिरस्पर्शहस्तद्वयेन प्रणामसमर्पणम् अस्माकं कर्तव्यम्। पञ्चकर्मेन्द्रियैः पञ्चज्ञानेन्द्रियैः बुद्ध्या च गुरपादारविन्दयोः न्यासं करणीयम्। गुरोः ऋणं प्रतिदातुं न कश्चित् लोके अस्ति।

''गुरोः प्रसादात् अन्यत्र नास्ति सुखं महीतले'' गुरोरनुग्रहं विना इह लोके परत्र वा सुखं दुर्लभम् इति शास्त्रम् उपदिशति। ज्ञानस्य ईश्वरस्वरूपत्वात् ज्ञानदाता साक्षात् परब्रह्म इति स्पष्टम्।

''न गुरोरधिकं न गुरोरधिकं न गुरोरधिकं शिव शासनतः'' भगवान् शिवः गुरुगीतायां पार्वतीमुवाच। यदि यः कश्चनः विषयं त्रिवारम् उक्तः तर्हि सत्यमित्यर्थः। भगवान् परमेश्वरः त्रिवारम् उक्तवान् इत्युक्ते गुरोः माहात्म्यं ज्ञातुं शक्यते।

## गुरु पौर्णमी



आषाढ पौर्णमी महान् दिवसः अस्ति गुरुं स्मर्तुं पूजयितुं च। गुरुपूर्णिमा व्यासपूर्णिमा इति अस्यैव दिवसस्य व्यवहारः। वेदव्यास महर्षिः गुरुः इत्यस्य प्रत्यक्षं प्रमाणम्। व्यासः तस्य उपाधिनाम, वेदस्य व्यासं (वेदस्य विभागः) अनेन कृतः इति कारणेन तस्य नाम व्यासः अस्ति। तस्य वास्तविकं नाम कृष्णः। सः कृष्णवर्णः इति कृत्वा कृष्णः इति द्वीपेजातः इतिकृत्वा द्वैपायनः इति आहत्य कृष्णद्वैपायनः इति व्यवहृतः। अनन्तवेदराशिं विभक्तवान्। ब्रह्मसूत्राणि लिखित्वा वेदान्तसारं दत्तवान्। गुरुपूर्णिमायां व्यासपूजनं करणीयमिति शास्त्रवचनम्। अतः भगवान् व्यासः सनातनधर्मस्य मूलधनम् अस्ति।

लोके विद्यमान प्रत्येक विषयस्य व्यास वचनम् एव स्रोतः अस्ति। अत एव पण्डिताः ''व्यासोच्छिष्टं जगत्सर्वम्'' इति अवदन्। व्यासेन उक्तं ये वदन्ति ते गुरवः इत्युच्यन्ते। व्यासेन वरत्रयं दत्तं। प्रथमं धर्मः (कर्मरूपधर्मः), उपासना, वेदान्तः। ये व्यासोक्तिम् अध्ययनं कुर्वन्ति, आचरन्ति, उपदिशन्ति च ते गुरुः इति स्मृताः। धर्मं ज्ञात्वा तस्य आचरणेन भक्त्या ज्ञानस्य प्राप्तिः भवति तदनन्तरं मोक्षं प्राप्नुवन्ति।

ब्रह्माण्डपुराणम् अस्मान् सूचयति यत् तानि यः अस्मान् प्रयच्छति सः गुरुः इत्यतः आचार्यः विष्णुस्वरूपी अस्ति। महाभारतं प्रतिपादितं यत् नारायणः अपान्तरतमः इति रूपं धृत्वा ब्रह्मणा स्वीकृतस्य वेदस्य अध्ययनं प्रसारं च अकरोत्। सः एव प्रत्येक मन्वन्तरे व्यासः रूपेण भासते। अस्मिन् मन्वन्तरे कृष्णद्वैपायनः व्यासः इति कथितः। आगामिषु मन्वन्तरेषु अगस्त्यः व्यासरूपेण आगमिष्यति इति च ज्ञायते। भारतीय (भारत) मूलशब्दस्य अर्थः यस्य ज्ञानं वर्तते। भा इत्यर्थः ज्ञानम्, रत इत्यस्यर्थः तान् व्युत्पादयितुं यदि नियोजिताः। ज्ञानं मुख्यं कृत्वा जीवन्ति इत्यर्थः। एतादृशं ज्ञानप्रदं गुरुं पूजयित्वा तेषां दर्शितधर्ममार्गेण गमनम् अस्माकं कर्तव्यम्।

॥श्री गुरुभ्यो नमः॥



(तदनन्तरम्)

चतुर्मुख! कैलासवास! हिरण्याक्ष संहारार्थं वराहावतारस्य आवश्यकता भवति। लोककण्टकः नाशितः। स्थावरजंगमाः स्थिरतया स्थिताः। हिरण्याक्षसंहारात् पूर्वं भवन्तः यथा स्थिताः आसन् तथैव भवन्तु। अहं श्रीदेव्या भूदेव्या च सह युष्माकं अनुकूलः भवामि। श्रीलक्ष्मीः मम वक्षस्थलनिवासिनी भवति। अहं लोकभयंकर रूपेण रम्याकारेण भूलोकवासान् अनुगृह्णामि। मम भक्तानां मनोवाञ्छाः पूरयिष्यामि। अपि च माम् ये शरणार्थिनः भवन्ति तेषाम् आश्रयं दास्यामि इति अभयं दत्तवान्। तदनन्तरं वराहदेवः दर्शनीयरूपः अभवत्। शान्तचित्तः भूत्वा देवतान् कारुण्यदृष्ट्या वीक्षित। हरिः स्वस्य स्थानं स्वस्य योग्यं कृतवान्। पुष्करिणी तीर्थम्, एकपार्श्वे भव्यपुष्करिणी अपरस्मिन् पार्श्वे, वायुव्ये चित्राति चित्र भवनानि, अपि च अद्भुताः मण्डपाः सहस्रसूर्यप्रकाशैः, कान्तियुक्त गोपुर प्राकारैः युक्तः मायानिगूढ विमानस्थः अभवत्। क्षणमात्रेण दीप्तभवनानि दृष्ट्वा देवताः विस्मिताः सन्तः भगवान् वराहः देवैः सह अन्तर्धानमभवत्।

देवानां गमनानन्तरं, श्रीभूनीळादेव्यौ वराहस्वामिं नमस्कृतवन्तौ। तथा हरिः अहं चिन्तितवान् यत् मम घोररूपं दृष्ट्वा आदिलक्ष्मीः भीता भविष्यतीति। परन्तु भवती मां ज्ञात्वा नीळादेव्या सह मम समीपम् आगतवती। अपि च परिवारेण सह आगमनं मम अतीव आनन्ददायकं भवति। इति उक्तवान्।

स्वामी भवतः किमर्थम् एवम् अनुभूयते। अहं त्वां त्यक्त्वा एकं निमेषमपि स्थातुं शक्नोमि वा? यदि मया किमपि दुष्कृतं कृतं तर्हि क्षम्यतां, सर्वान् दयादृष्ट्या पश्यन्तु इति प्रार्थितवती।

यदि अहं पृथिवीं सर्वाम् अन्वेषयामि तर्हि एतत् स्थानमेव मम धामयोग्यं स्थानं मम परमां तृप्तिं ददाति। आदिलक्ष्मी एतदेव अस्माकं वैकुण्ठं भवति इति उक्तवान् हरिः।

भवन्तः सर्वज्ञः यत्र भवन्तः तिष्ठन्ति तदेव मम स्थानम्। एतत् प्रदेशं साक्षात् रमणीयं. कमनीयमपि। फलवृक्षैः विविधैः पुष्पलताभिः, पुण्यतीर्थैः, मुन्याश्रमैः उच्चैः गिरि शिखरैः मोक्षस्थलमिव दृश्यते। एतत् प्रदेशं सर्वं मम बहु रोचते। इति उच्यते चेत् वराहदेवः आदिलक्ष्मीं वक्षःस्थले संस्थाप्य देवान् आदरेण दृष्ट्वा, गरुडानन्त, विष्वक्सेनादयः सेवां स्वीकृत्य तिष्ठति इति सूतः श्वेतवराहवृत्तान्तं वदति, तदा मुनयः पुराणवेदि अस्माकम् इच्छां सम्पूर्णं कृतवान्। भवन्तः स्वामि पुष्करिणी विषये प्रस्तावितवन्तः। तान् पुष्करिणी विशेषान् वयं श्रोतुमिच्छामः कृपया वदन्तु इति मुनयः प्रार्थितवन्तः।

अवश्यं वदामि इति सूतः उक्तवान्।

(अनुवर्तिष्यते)




- डा।। सि.शिवारेड्डि
चरवाणी - ९४४०८५९८७२



# समानमस्तु भोजनम्

बालकृष्णः गोकुले गोपालनं करोति स्म। प्रतिदिनं सः वयस्यैः सह वनं गच्छति स्म। गोकुलस्था बालगोपालाः वासुदेवेन सह आसायं हिण्डन्ते स्म। मध्याह्ने ते सर्वे स्वगृहेभ्यः आनीतानि खाद्यवस्तूनि एकत्र उपविश्य खादन्ति स्म।

एकस्मिन् दिने भोजनवेळायां सर्वे गोपाः कृष्णं परितः उपाविशन्। देवकीनन्दनः गोपबालान् अपृच्छत्। ''अद्य भोजनार्थं किम् आनीतम्?'' इति। तदा प्रथमः अवदत्, ''मम समीपे दध्योदनं वर्तते।'' अपरः अभाषत, ''मम समीपे पृथुकाः।'' एवमेव सर्वे ''पूपाः, लड्डुकाः, वटकाः, मोदकाः आनीताः'' इति अवदन्। तदा कृष्णः अवदत्, ''अयि मित्राणि, वयम् एतेषां खाद्यपदार्थानां मिश्रणं कुर्मः।'' सर्वे गोपालाः आनन्देन कृष्णाय स्वं स्वं खाद्यम् अयच्छन्। कृष्णः स्वयमेव पदार्थानां मिश्रणम् अकरोत्। सर्वेभ्यः च तद् मिश्रणं पर्यवेषयत्। तद् अपूर्वं स्वादिष्ठं मिश्रणं सर्वेभ्यः अतीव अरोचत। यतः तस्मिन् मिश्रणे न केवलं खाद्यपदार्थाः अपि तु स्नेहश्चा मिश्रितः। तदा गोपनायकः बालकृष्णः अवदत्, इतः परं वयं सर्वे सम्मिल्य एव भोजनं कुर्मः। अयि मित्राणि, अस्माकं मनांसि समानानि, विचाराः समानाः भोजनमपि समानमस्तु।''



# तिरुमलतिरुपतिदेवस्थानानि




कटकमासं शुक्ल
द्वादशी (३०-०७-२०२३)
दिनाङ्के
तुलसीमाहात्म्यम्
आस्थानं भविष्यति।
अस्मिन् दिने तिरुपति
गोविन्दराजस्वामिनः
प्रातःकालाराधनं
भविष्यति। तदनन्तरं
स्वामी गरुडवाहनारूढो
भूत्वा तिरुवीथ्याम्
उत्सवार्थं गमिष्यति।
अनन्तरम् आलयम्
आगमिष्यति। तदनन्तरं
जयविजययोः सम्मुखे
स्वामिनः आस्थानं
भविष्यति। आस्थाने
तुलसी माहात्म्य पुराणं
पठिष्यन्ति। तदनन्तरम्
आस्थानं सम्पूर्ण
भविष्यति। अनन्तरं
स्वामी सन्निधिं प्रति
आगमिष्यति।
तदनन्तरं
नित्यकैङ्कर्याः
भविष्यन्ति।
अस्मिन् सन्दर्भे
पुरस्कृत्य सप्तगिरि
पाठकानां कृते तुलसी
मातायाः अष्टोत्तर
शतनामावलिं ददामः।

# श्री तुलसी अष्टोत्तरशतनामावळी

ॐ श्री तुलस्यै नमः।
ॐ पावन्यै नमः।
ॐ पूज्यायै नमः।
ॐ बृन्दावननिवासिन्यै नमः।
ॐ ज्ञानदात्र्यै नमः।
ॐ निर्मलायै नमः।
ॐ सर्वपूजितायै नमः।
ॐ सत्यै नमः।
ॐ पतिव्रतायै नमः।
ॐ बृन्दायै नमः। 10

ॐ क्षीराब्धिमथनोद्भवायै नमः।
ॐ कृष्णवर्णायै नमः।
ॐ रोगहन्त्र्यै नमः।
ॐ त्रिपर्णायै नमः।
ॐ सर्वकामदायै नमः।
ॐ लक्ष्मीसख्यै नमः।
ॐ सत्यशुद्धायै नमः।
ॐ सुदत्यै नमः।
ॐ भूमिपावन्यै नमः।
ॐ हरिध्यानैकनिरतायै नमः। 20

ॐ हरिपादकृतालयायै नमः।
ॐ पवित्रायै नमः।
ॐ श्रीरूपिण्यै नमः।
ॐ धन्यायै नमः।
ॐ सुगन्धिन्यै नमः।
ॐ अमृतोद्भवायै नमः।
ॐ सुरूपायै नमः।
ॐ आरोग्यदात्र्यै नमः।
ॐ तुष्ट्यै नमः।
ॐ शक्तित्रयरूपिण्यै नमः। 30

ॐ देव्यै नमः।
ॐ देवर्षिसंस्तुतायै नमः।
ॐ कान्तायै नमः।
ॐ विष्णुमनःप्रियायै नमः।
ॐ भूतभेतालभीतिघ्नायै नमः।
ॐ महापातकनाशिन्यै नमः।
ॐ मनोरथप्रदायै नमः।
ॐ मेधायै नमः।
ॐ कान्त्यै नमः।
ॐ विजयदायिन्यै नमः। 40

ॐ शङ्खचक्रगदापद्मधारिण्यै नमः।
ॐ कामरूपिण्यै नमः।
ॐ अपवर्गप्रदायै नमः।
ॐ श्यामायै नमः।
ॐ कृशमध्यायै नमः।
ॐ सुकेशिन्यै नमः।
ॐ वैकुण्ठवासिन्यै नमः।
ॐ नन्दायै नमः।
ॐ बिम्बोष्ठ्यै नमः।
ॐ कोकिलस्वरायै नमः। 50

ॐ कपिलानिमग्नगासम्भवायै नमः।
ॐ आयुष्यदायिन्यै नमः।
ॐ वररूपायै नमः।
ॐ दुःखनाशिन्यै नमः।
ॐ अविकारायै नमः।
ॐ चतुर्भुजायै नमः।
ॐ गरुत्मद्वाहनायै नमः।
ॐ शान्तायै नमः।
ॐ दान्तायै नमः।
ॐ विघ्ननिवारिण्यै नमः। 60

ॐ श्रियै नमः।
ॐ विष्णुमालिकायै नमः।
ॐ तुष्ट्यै नमः।
ॐ त्रिवर्गफलदायिन्यै नमः।
ॐ महाशक्त्यै नमः।
ॐ महामायायै नमः।
ॐ लक्ष्मीवाणीसुपूजितायै नमः।
ॐ सुमङ्गलायै नमः।
ॐ अर्चनप्रीतायै नमः।
ॐ सौमङ्गल्यविवर्धनायै नमः। 70
ॐ चातुर्मासोत्सवाराध्यायै नमः।
ॐ विष्णुसान्निध्यदायिन्यै नमः।
ॐ उत्थानद्वादशीपूज्यायै नमः।
ॐ सर्वदेवप्रपूजितायै नमः।
ॐ गोप्यै नमः।
ॐ रतिप्रदायै नमः।
ॐ निर्गुणायै नमः।
ॐ पार्वतीप्रियायै नमः।
ॐ अपमृत्युहरायै नमः।
ॐ राधाप्रियायै नमः। 80
ॐ मृगविलोचनायै नमः।
ॐ अम्लानायै नमः।
ॐ हंसगमनायै नमः।
ॐ कमलासनवन्दितायै नमः।
ॐ भूलोकवासिन्यै नमः।
ॐ शुद्धायै नमः।
ॐ रामकृष्णादिपूजितायै नमः।
ॐ सीतापूज्यायै नमः।
ॐ राममनःप्रियानन्दनसंस्थितायै नमः।
ॐ सर्वतीर्थमयायै नमः। 90
ॐ मुक्तायै नमः।
ॐ लोकसृष्टिविधायिन्यै नमः।
ॐ प्रातर्दृश्यायै नमः।
ॐ वैष्णव्यै नमः।
ॐ सर्वसिद्धिदायै नमः।
ॐ नारायण्यै नमः।
ॐ सन्ततिदायै नमः।
ॐ मूलमृदे नमः।
ॐ पावन्यै नमः।
ॐ अशोकवनिकासंस्थासीताध्यातायै नमः। 100
ॐ निराश्रयायै नमः।
ॐ गोमतीसरयूतीरसंस्थायै नमः।
ॐ कुटिलालकायै नमः।
ॐ अपात्रभक्ष्यपापघ्नायै नमः।
ॐ दानतोयायै नमः।
ॐ विशुद्धिदायै नमः।
ॐ श्रुतिधारणसुव्रतायै नमः।
ॐ शुभायै नमः।
ॐ सर्वेष्टदायिन्यै नमः। 108
श्री तुलसीदेव्यै नमः।

इति
श्री तुलसी
अष्टोत्तरशतनामावळी।



# तिरुमलतिरुपतिदेवस्थानानि

2023 मे २१ तः २५ दिनाङ्क पर्यन्तम् आयोजित श्री गोविन्दराजस्वामिनः आलय महासम्प्रोक्षण दृश्याणि। अस्मिन् कार्यक्रमे ति.ति.दे. पालकमण्डलि सदस्याः श्री पोकल अशोक् कुमार्, ति.ति.दे. सम्युक्त कार्यनिर्वहणाधिकारि श्री वि.वीरब्रह्मम् ऐ.ए.एस्., ति.ति.दे. एफ्.ए.सि.ए.ओ., श्री बालाजी, आलय अधिकारिणः च भागं गृहीतवन्तः।

















अल्लूरिसीतारामराजु मण्डलम्, रम्पचोडवर ग्रामे ति.ति.दे. नूतनतया निर्मित श्री वेङ्कटेश्वरस्वामिनः आलय महासम्प्रोक्षण दृश्यानि। अयम् उत्सवः मे १७ तः २२ दिनाङ्क पर्यन्तम् आयोजितः। अस्मिन् कार्यक्रमे राजमहेन्द्रवर संसदसदस्यः श्री मार्गानि भरत् राम्। ति.ति.दे. धर्मकर्तारः मण्डलि अध्यक्षः श्री वै.वी सुब्बारेड्डि दम्पत्यः, ति.ति.दे., सम्युक्त कार्यनिर्वहणाधिकारि श्री वीरब्रह्मम्, ऐ.ए.एस्., तदितराः भागं गृहीतवन्तः।



# महाभारतान्तर्गत - यवक्रीतोपाख्यानम्

- डा. बी.कामाक्षम्मा, चरवाणी - ७२९०८०९७१९

(तदनन्तरम्)

मैवं वृथा यवक्रीत यथा वदसि वै मुने।
ऋते गुरुमधीता हि सुखं वेदास्त्वया पुरा।
अनेन तु गुरून् दुःखात् तोषयित्वात्मकर्मणा।
कालेन महता क्लेशात् ब्रह्माधिगतमुत्तमम्।।

**मेधावी** - बालधेः पुत्रः

**धनुषाक्षः** - तपस्सम्पन्नः मुनिः

पुत्रवधूसमानाकृतिः नारी, एवं घोराक्षः - यज्ञकुण्डात् समुत्पन्नौ राक्षसौ, रैभ्यमुनेः सेवकौ

पात्राणि - सन्देश

**भरद्वाजः** -

उत्तमव्यक्तिनिर्माणे माता-पितृणां महती भूमिका भवति। उत्तमव्यक्तिनिर्माणेन उत्तमसमाजनिर्माणम्, उत्तमसमाजनिर्माणेन उत्तमराष्ट्रनिर्माणं स्वयं सिध्यति। युवावस्थायां गर्भेश्वरत्वं, अभिनवयौवनत्वं, अमानुषशक्तिमत्वं, अप्रतिमरूपत्वमित्यादयः गर्वकारणानि भवन्ति।

अतः बाल्यादारभ्य पुत्र-पुत्र्याश्च अस्माभिः उपदेष्टव्याः। ते श्रुण्वन्तु वा न वा, आचरन्तु वा न वा। पुनः पुनः कथनं मातापितृणां परमं कर्तव्यम्। अस्मिन् विषये भरद्वाजमुनिः अस्माभिः अनुसरणीयः। महाभारते धृतराष्ट्रः दुष्टमार्गे गच्छन्तं सुयोधनं कदापि न निवारयामास। अत एव सम्पूर्णकुरुवंशः विनष्टः। अतः भरद्वाजवत् वर्तितव्यं, न धृतराष्ट्रवत् इति उपदिशति एतदुपाख्यानम्।

**यवक्रीतः** -

मानवः अनायासेन सर्वं प्राप्तुमभिलषति। किन्तु तदर्थं यत्करणीयं तत्तु न कर्तुमिच्छति। अत एव प्रोक्तमस्ति यत् - पुण्यस्य फलमिच्छन्ति पुण्यं नेच्छन्ति मानवाः इति।

अस्मिन्नुपाख्याने यवक्रीतः समाजे रैभ्यमुनेः सत्कारं दृष्ट्वा ईर्ष्यालुः भवति। सोऽपि तत्प्राप्तुमिच्छति किन्तु तत्कारणभूतं वेदज्ञानं गुरुमुखादध्ययनं कर्तुं तु नेच्छति। अर्थात् एतादृशकुत्सितमानवानां स्वभावं यवक्रीतपात्रद्वारा भगवता व्यासेन दर्शितम्। अपि च अपत्यानां कृते यथाशक्ति सत्पथप्रदर्शनं पितृणां दायित्वं परमकर्तव्यमिति भरद्वाजमुनिपात्रद्वारा व्यासमहर्षिणा प्रबोधितमस्ति।

सत्पथप्रदर्शनं कृते सत्यपि सर्वे नानुपालयन्ति। अत एव उत्तररामचरिते भवभूतिः एवं वदति -

बुद्धिः कर्मानुसारिणी इत्यादिशास्त्रवाक्यैः निर्णयात्मिकाबुद्धिः कृतकर्मानुसारं प्रवर्तते इति ज्ञायते। तत्र कारणबाहुल्यं विद्यते। अत एव उत्तररामचरिते द्वितीये अङ्के आत्रेयी वनदेवतां वासन्तीमुद्दिश्य वदति यत् - गुरुः तीक्ष्णबुद्धीनाम् एवमेव मन्दबुद्धीनां कृते समानरूपेण विद्यां बोधयति। किन्तु तस्य परिणामे महदन्तरं भवति इति। यद्यथा -

**वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे**
**न तु खलु तयोर्ज्ञाने शक्तिं करोत्यपहन्ति वा।**
**भवति हि पुनर्भूयान् भेदः फलं प्रति तद्यथा**
**प्रभवति शुचिर्बिम्बग्राहे मणिर्न मृदादयः।। उ.रा.च.२/४।।**

तद्वदेव अस्मिन्नुपाख्याने भरद्वाजमुनिः 'रैभ्यमुनिः तस्य पुत्रौ च अत्यन्तं तपस्सम्पन्नाः, वीर्यवन्तः क्रोधिनश्च। अतः तस्मिन् विषये जागरूको भवेति स्वपुत्रं यवक्रीतमुपदिदेश। तथापि सः तद्विपरीताचरणं कृत्वा अवश्यमनुभोक्तव्यं कृतं कर्म शुभाशुभम् इति कथनानुसारं तस्य फलम् अनुभुक्तवान्।

**परावसुः -**

अत्यन्तं कुत्सितः। तस्य सहोदरः अर्वावसुः अत्यन्तमुपकारं कृतवान्। तथापि परावसुः अपकारमेव कृतवान्। लोके परावसुसदृशाः भवन्ति अतः जागरूकैः भाव्यमिति, अपि परावसुवत् नाचरणीयमिति उपदेशः सभ्यते।

परोपकारः एव सत्पुरुषाणां सहजः स्वभावः। ते कस्यामपि स्थित्यां परेषाम् अपकारं न कुर्वन्ति। प्रत्युत अपकारिणां कृतेपि उपकारमेव कुर्वन्ति।

सहजतया आबालवृद्धाः कथासु रुचिं दर्शयन्ति। महाभारतं भारतीयानाम् इतिहासग्रन्थः। तस्मिन् बह्व्यः कथाः विराजन्ते। अतः ताः कथाः श्रावयित्वा भारतीयेतिहासस्य संरक्षणं, तद्वारा सन्मार्गोपदेशं च कुर्मः।

**।।जयतु भारतम्, जयतु संस्कृतम्।।** 



## मे - २०२३
### लघुप्रश्नोत्तरी समाधानानि

१.अष्टादश अक्षौहिणी
२.भीष्मपर्वणि
३.रघुवंशः
४.मल्लिनाथः
५.नलचम्पू
६. गुणाख्यः
७.उपनिषदः भगवद्गीता, ब्रह्मसूत्रापि
८.सूर्यः गणपतिः, अम्बिका, शिवः विष्णुः च
९.गन्धः, पुष्पं, धूपः दीपः, नैवेद्यं च।
१०.समान्यतः ११३०
११.ब्राह्मी
१२.चीनी भाषयाः
१३.आषाढ - अमावस्यायाम्
१४.दीपावली दिने
१५.श्वेतवराहकल्पः

श्रीमते रामानुजाय नमः

श्री न च रघुनाथाचार्यप्रणीता

# श्रीशेषाद्रीशस्तुतिः

## सुवर्णसौरभव्याख्यासमेता

(तदनन्तरम्)

व्याख्याता - डा. कन्दाल लक्ष्मीनारायणः - नेल्लूरुः

चरवाणी - ९९८५२३७३५३

### शेषशैल रामण्यकम्

श्लो४. मेदुरं बहुफलै र्महीरुहैः
भासुरं च विमलै र्जलाशयैः।
शेषशैल मधिरुह्य दीप्यते
भक्तरक्षणचणः परः पुमान्॥

ता - बहुसङ्ख्याक फलभरितैः नानाविधफलवृक्षैः सान्द्रतया व्याप्तः शेषपर्वतः। तथैव निर्मलतोयपूर्णैः बहुभिः जलाशयैश्च समाप्लुतोऽसौ वृषभाद्रिः। तादृशं महान्तं शेषशैल मधिष्ठाय तत्र भक्तरक्षणेऽत्यन्तं विदितः परमपुरुषः श्रीनिवासोऽतीव विराजते।

सु.सौ.व्याख्या - भगवन्निलयस्य वेङ्कटनगस्य फलपुष्कलत्वं वारिपूरत्वं च संस्तूयतेऽस्मिन् श्लोके।

मेदुरं.... महीरुहै : - मेदुरः अत्यन्तस्निग्धः। ''सान्द्रस्निग्धस्तु मेदुरः'' ३.१.३० इत्यमरः ञिमिदा स्नेहने इति धातोः भञ्जभासमिदोधुरच्'' अष्टा ३.२.१६१ इति धुरच् प्रत्ययः। नारायणाद्रिः फलनिर्भरैः बहुविधैः पादपै स्समुपेत इत्यर्थः। प्रपन्नजनकुलपतिभिः शटकोपसूरिभिः तिरुवायूमोळि दिव्यप्रबन्धे श्रीवेङ्कटनगस्य वनवैभवः कीर्तित एवम् -



''तिरुवेङ्गडं मोयत्तशोलै मोयूपून्तडं ताळ्वरे - ३.३.१०-निबिडैः वनैः सुन्दर सुमभरितै स्तटाकैश्च विराजमानं वेङ्कटाचलम् आश्रयध्वम् - इति।
कुलशेखरसूरिभिश्च गिरेरस्य वैभवः प्रस्तुत इत्थम् - ''तेनार् पूञोलै तिरुवेङ्गडमलैमेल्'' पेरु ति,मो.४.७ - मरन्द निष्यन्दि सुमसमृद्धिभिः वनैः स्निग्धः शेषाचल इति।
तथोक्तं च वेङ्कटाचलमाहात्म्ये वाराहपुराणे -

**अयं गिरिर्महापुण्यस्सर्वसत्त्वसमाश्रयः**
**निर्बाधः फलमूलाढ्य स्सर्ववृक्षसमाश्रयः।**
**नानाप्रस्रवणोपेता याज्ञियैश्च महीरुहैः**
**अन्यै स्तापसयोग्यैश्च पादपैरपि सङ्कुलः।। ३७.५.६.**

इति।
भासुरंच .... जलाशयैः - भासुरः प्रकाशशीलः। भासधातोः पूर्व (अष्टा ३.२.१६१) सूत्रेणैव घुरच्प्रत्ययः। विमलः निष्कलुषः पङ्करहित इत्यर्थः। जलानाम् आशयः आकरः जलाशयः। सरोवरमिति यावत्। नित्यसमृद्धजलम् इति भावः। विमलत्वं नाम ''अकर्दममिदं तीर्थम्' - श्रीरामा १.२.५. इत्युक्तरीत्या कर्दमरहिततया प्रसन्नसलिलत्वेन च रमणीयत्वम्। तादृशैः बहुभिः स्वामिपुष्करिणी, कुमारधाराप्रभृतिभिः विराजमानः शेषशैल इति तात्पर्यम्।

परकालसूरिभि र्यथा प्रस्तुतमिदं दिव्यक्षेत्रम् - ''तीर्थनीर् तडञ्जेलैशूळ् तिरुवेङ्गडम्' पे.ति.मो.१.८.४-बहुभिः पुण्यतीर्थैः तथा सुशीतलैः काननै श्च परिवृतो वेङ्कटाद्रिः इति। निगदिता च श्रीब्रह्माण्डपुराणे वेङ्कटशैलस्य वनजल रमणीयता -

**गिरि निर्झर संयुक्त नदीप्रस्रवणै र्युतम्।**
**विविधै र्वृक्षषण्डैश्च रूपशोभितम्।।**
**मालती कुन्द कुटजैस्सिन्धुवारैः कुरण्टकैः।**
**कदम्बार्जुनवंशैश्च चन्दनैः पनसैस्तथा।**
**अशोकैर्वकुलै र्गुञ्जै स्तमालै स्समलङ्कृतम्।**
**नानाविहगसङ्घुष्टं मयूरैरेव नादितम्।।**
**तीर्थ -३.५.६,७ इत्यादिना।।**

भक्तरक्षणचणः - भक्तानां रक्षणे प्रसिद्धः। रक्षणं द्विविधम् - अनिष्टनिवारणेन, अभीष्टप्रदानेन च। द्वयमपि श्रीनिवासे प्रसिद्धम्। तेन हेतुना प्रसिद्ध इत्यर्थे'' तेन वित्तश्चुञ्चुप् चणपौ - अष्टा ५.२.२६ इति सूत्रेण चणप् प्रत्यये भक्तरक्षणचण शब्दस्सिद्धः। भक्तरक्षणं च भगवतो गजेन्द्र, ध्रुव, प्रह्लाद, गोगोपगोपीजन, द्रौपदी संरक्षणादि लीलाकृत्यैः प्रसिद्धम्।'' परित्राणाय साधूनाम्'' भ.गी. इति योगक्षेमं वहाम्यहम्' भ.गी. इति च भगवतैव हि स्वयम् उक्तम्''।

आत्मरक्षणेच्छुभिः भक्तैः आश्रीयमाणत्वाय बहुत्र बहुरूपैः दयालुः आदिपुरुषो बाभाति इति - श्री भक्तिसारसूरयो गायन्ति एवम् -

**कुन्रिल् वानिरुन्दु नीळ् कडल् किडन्दु मण्**
**ओन्तु शेन्त्रतोन्तै युण्ड तोन्रिडन्दु पन्रिताय्**
**नन्नु शेन्र नाळवत्तुळ् नल्लुयिर पडैत्तवर्कु**
**अन्नु देव मैतब्ति वादिदेव नल्लैये।। -**
**तिरुच्चन्द.४८**

- हे भगवान्! वेङ्कटाद्रिमधिष्ठाय श्रीवैकुण्ठेऽवस्थाय विपुलं क्षीरसागर मधिशय्य भूमौ पादेनाभिव्याप्य तामेव परिगृह्य तां वराहरूपेण उद्धृत्य, सङ्कल्पपूर्वकं जीववर्गं संसृज्य तद्गुणानुगुणम् आश्रयणाय देवानपि संस्थाप्य, सर्वदा हितकारी जगत्कारण भूतस्त्वं सर्वसमाश्रयणीयोऽसि।।

परः पुमान् - परमपुरुषः।'' सहस्रशीर्षा पुरुषः, वेदाहमेतं पुरुषं महान्तम्'' ह्रीश्च ते लक्ष्मीश्च पत्न्यौ'' पु.सू.इति विदितः श्रियः पतिः वेङ्कटनाथः। तथा च तैत्तिरीयके ''नारायण परं ब्रह्म - ११.४. इत्यादि। स एष परः पुमान् -

**मायावी परमानन्दं त्यक्त्वा वैकुण्ठ मुत्तमम्।**
**स्वामिपुष्करिणीतीरे रमया सहमोदते।। शेषधर्म - १३**

- इत्युक्तरीत्या श्रीवैकुण्ठं परित्यज्य शेषाद्रौ विमलसलिलरमणीयं बहुफलतरुकमनीयं च स्वामिपुष्करिणी तीरमासाद्य रमया सह आनन्दमनुभवन् विराजते। अपि चात्रपाद्मपुराणे क्षेत्रकाण्डे ३४ तमेऽध्याये प्रोक्ता वेङ्कटेशावतारकथा च प्रस्तोतव्या।।

अत्र रथोद्धतनामकं वृत्तं स्वीकृतम्। तस्य लक्षणं च रान्नरा विह रथोद्धता लगौ'' इति।।

(अनुवर्तिष्यते)

चित्रकथा

# गुरुदक्षिणा


तेलुगुमूलम् - डा.कम्पेल्ल रविचन्द्रन्
चित्राणि - तुम्बलि शिवाजी
संस्कृतानुवादः - का. भास्करः
चरवाणी - ८१४३१५०८३३
















कालक्रमे कुरुपाण्डवयोः विद्याशिक्षणं समाप्तम्...

अस्मान् एव वीरान् इव भवन्तः कृतवन्तः। युष्माकं गुरुदक्षिणा का दातव्या?

द्रुपदं बद्ध्वा गुरुदक्षिणा रूपेण देयम्।

अर्जुनः द्रुपदं युद्धे पराजितं कृत्वा तं रथचक्रे बद्ध्वा द्रोणाचार्यस्य सन्निधौ आनीतवान्।

गुरुदक्षिणां स्वीकुर्वन्तु गुरुदेव।

कः एषः? अस्य रत्नाभरणानि, पीताम्बराणि पश्यामः चेत् द्रुपदः इव दृश्यते?

मित्र द्रोण! मां क्षम्यताम्।

राज्याधिकारगर्वः गतः वा? सर्वाणि दिनानि अस्माकं न भवन्ति द्रुपद! ज्ञातं वा?

अर्जुन! एतस्य बन्धनानि विमोचयतु।

वत्स! अर्जुन! अस्य दिवसस्य कृते दिवारात्रं दृष्टवान्। अद्य मम इच्छा पूरिता।

विजयोस्तु चिरञ्जीव! स्नेहे तारतम्याणिः न भवेयुः इति चरित्रं उल्लिख्य गुरुदक्षिणां दत्तवान् तव सर्वदा जयम् एव।

स्वस्ति

प्रदत्तं चित्रपटम् बिन्दुसहाय्येन पूरयामः वा?

अस्य चित्रपटस्य रञ्जनं कुर्मः वा?



बा ल वि नो दि नी







## रसप्रश्नाः

१. श्रीरङ्गे स्थित पुष्करिण्याः नाम किम्?

२. भागवते सप्तम स्कन्धे कस्य इतिहासः दृश्यते।

३. कस्य दानेन स्वर्गे प्रथमतः गन्तुं शक्यते।

४.शौचं कतिप्रकारम्? ते के?

५.विराटराज्ये सहदेवस्य नाम किम्?

६. परशुरामस्य रथसारथेः नाम किम्?

(समाधानानि - १. चन्द्र पुष्करिणी २. प्रह्लादस्य ३. अन्नदानेन ४. वाक्यशौचम्, कर्मशौचम्, जलशौचं च ५. अरिष्टनेमिः ६. सुबाहुः )








(१.एका पक्षी न दृश्यते २. रङ्गवल्ली नास्ति ३. पुष्पं नास्ति ४.काष्ट खण्डं नास्ति ५. भित्तिः सम्यक् नास्ति ६. गुल्मं नास्ति ७.कदली पत्राणि न सन्ति।)



# लघुप्रश्नोत्तरी



तिरुमलतिरुपतिदेवस्थानानि

१२



ऐदंप्राथम्येन सप्तगिरिमासपत्रिकायां लघुप्रश्नोत्तरी इति स्पर्धाकार्यक्रमः आयोजितः
यत्र एतन्मासीयपत्रिकायां प्रकटितविषयाधारिताः प्रश्नाः भवेयुः। अतः हे बालबालिकाः!
प्रतिमासं इमां पत्रिकां पठित्वा उत्तरदानप्रक्रियायां सक्रियं भागं वहन्ति खलु!

१. पाण्डवानां कृते मयसभायाः निर्माणं करोतु इति मयस्य कः उक्तवान्?

२. मयः कति मासेषु मयसभां निर्मितवान्?

३. रुक्मिणीश्रीकृष्णयोः पुत्रः कः?

४. मयसभायाः रूपकल्पना कः कृतवान्?

५. मासे प्रतिसप्तम्यां उपवासं कृत्वा आचरणीय व्रतं किम्?

६. वराहपुराण मनुसृत्य जम्बूद्वीपः कति योजनानि अस्ति?

७. ''कठ'' आरण्यकं कस्मिन् वेदे अस्ति?

८.माण्डूक्यकारिका इति भाष्यं कः रचितवान्?

९. संहितापाठे अत्युन्नत स्तरः कः?

१०. कुम्भकर्णस्य कुमारः कः?

११. ऋष्यश्रुङ्गस्य पिता कः?

१२. युयुत्सुः कस्य पुत्रः?

१३. समुद्रस्य भार्या का?

१४. वातापेः सोदरः कः?

१५. तारा कस्य सुतनया?

| समाधानानि |
|---|
| १. |
| २. |
| ३. |
| ४. |
| ५. |
| ६. |
| ७. |
| ८. |
| ९. |
| १०. |
| ११. |
| १२. |
| १३. |
| १४. |
| १५. |

## नियमावालिः

१. केवलं १० तः १५ वर्षीयाः बालाः हैन्दवाः अत्र भागं ग्रहीतुमर्हन्ति।

२. बालाः पत्रिकापुटे प्रदत्तस्थले समानभाषायाम् एव उत्तरं विलिख्य तत्पत्रं The Chief Editor Office, Sapthagiri, T.T.D. Press Compound, K.T.Road, Tirupati 517507, प्रति २५ दिनाङ्कात् पूर्वं प्रेषयेयुः। प्रतिकृतीः (Xerox) नैव स्वीक्रियन्ते।

३. बालानां पितरौ मासपत्रिकाग्रहीतारः (Subsribers) भवेयुः। तत्र नाम, सङ्केतः, दूरवाणीसङ्ख्या च उत्तरपत्रिकायां देया एव।

४. समाधानेषु त्रुटयः, समीकरणानि च न भवेयुः।

५. सर्वेषां प्रश्नानां समीचीनसमाधानं दत्तवतां त्रयाणां बालानां चयनं DIP द्वारा क्रियते।

६. विजेतृणां नामानि अग्रिममासीय सप्तगिरि पत्रिकायां प्रचुरितानि भवन्ति।

७. Chief Editor कार्यालयीयकार्यकर्तृपुत्रपुत्रिकाणां च अत्र अवकाशो नास्ति।

८. अस्य कार्यक्रमस्य समाचारः दूरवाणीद्वारा नैव दीयते।

९. प्रश्नोत्तयाः उत्तराणि प्रेषयितुम् अन्तिमतिथिः २५.०७.२०२३ अस्ति।

Subscription Number :

Name :

Mother :

Father :

Address :

Phone Number :

Printed by Sri P. Ramaraju, M.A., and Published by Dr. K. Radha Ramana, M.A., M.Phil., Phd., on behalf of Tirumala Tirupati Devasthanams and Printed and Publised at Tirumala Tirupati Devasthanams Press, K.T. Road,Tirupati 517 507. Editor : Dr.V.G. Chokkalingam, M.A., Ph.D.



तिरुमलक्षेत्रे अञ्जनाद्रि, आकाश तीर्थम्, जापाली श्री स्वामिनः पुरतः स्थित श्री बेडि आञ्जनेय स्वामिनः आलयः तिरुमल प्रथम घाट् मार्गे, सप्त मैलु समीपे स्थित श्री प्रसन्न आञ्जनेय स्वामिनः अयोजित हनुमज्जयन्ति उत्सव दृश्याः।



अस्मिन् उत्सवे श्री कञ्चि कामकोटि पीठाधिपतिः श्री श्री श्री विजयेन्द्र सरस्वती स्वामिनः अनुग्रह भाषणं दत्तवन्तः। अस्मिन् कार्यक्रमे ति.ति.दे. कार्यनिर्वहणाधिकारि श्री ए.वि.धर्मा रेड्डि, इ.डि.ई.एस्., ति.ति.दे. सम्युक्त कार्यनिर्वहणाधिकारि, श्री वि.वीरब्रह्मम्. ऐ.ए.एस्., तदितराः भागं गृहीतवन्तः।











SAPTHAGIRI (SANSKRIT) SPIRITUAL ILLUSTRATED MONTHLY PUBLISHED BY TIRUMALA TIRUPATI DEVASTHANAMS
PRINTING ON 25-06-2023 & posting at Tirupati RMS Regd.with the Registrar of Newspapers for India under RNI No.21138/1970 Postal Regd. No. TRP/154/2021-2023"
LICENCED TO POST WITHOUT PREPAYMENT No.PMGK/RNP/WPP-04(4)/2021-2023"
Posting on 5th of every month.

# आण्डाळ् तिरुवाडिप्पूरम् शात्तुमोर

(22-07-2023)











कर्कटे पूर्वपळ्गुण्यां तुलसीकाननोद्भवाम् ।
पाण्ड्ये विश्वम्भरां देवीं वन्दे श्रीरङ्गनायकीम् ॥